# अथ श्री गुरुगीता

अस्य श्री गुरुगीता स्तोत्रमन्त्रस्य
भगवान् सदाशिव ऋषिः
नानाविधानि छन्दांसि
श्री गुरुपरमात्मा देवता
हं बीजम्
सः शक्तिः
क्रों कीलकम्
श्री गुरुप्रसादसिद्ध्यर्थे पाठे विनियोगः १

ध्यानम्

हंसाभ्यां परिवृत्तपत्रकमलैर्दिव्यैर्जगत्कारणैः
विश्वोत्कीर्णमनेकदेहनिलयैः स्वच्छन्दमात्मेच्छया २
तद्द्योतं पदशांभवं तु चरणं दीपाङ्कुरग्राहिणम्
प्रत्यक्षाक्षरविग्रहं गुरुपदं ध्यायेद्विभुं शाश्वतम् ३

ऋषय ऊचुः

गुह्याद्गुह्यधरा विद्या गुरुगीता विचेतसः
ब्रूहि नः सूत कृपया शृणुमद्वत्प्रसादकः ४

सूत उवाच

कैलास शिखरे रम्ये भक्तिसन्धाननायकम्
प्रणम्य पार्वती भक्त्या शङ्करं पर्यपृच्छत ५

श्री देव्युवाच

ॐ नमो देवदेवेश परात्परजगद्गुरो
सदाशिव महादेव गुरुदीक्षां प्रदेहि मे ६

केन मार्गेण भो स्वामिन् देही ब्रह्ममयो भवेत्
त्वं कृपां कुरु मे स्वामिन् नमामि चरणौ तव ७

ईश्वर उवाच

ममरूपासि देवि त्वं त्वत्प्रीत्यर्थं वदाम्यहम्
लोकोपकारकः प्रश्नो न केनापि कृतः पुरा ८
दुर्लभं त्रिषु लोकेषु तच्छृणुष्व वदाम्यहम्
गुरुं विना ब्रह्म नान्यत्सत्यं सत्यं वरानने ९
वेदशास्त्रपुराणानि इतिहासादिकानि च
मन्त्रयन्त्रादिविद्याश्च स्मृतिरुच्चाटनादिकम् १०
शैवशाक्तागमादीनि अन्यानि विविधानि च
अपभ्रंशकराणीह जीवानां भ्रान्तचेतसाम् ११
यज्ञो व्रतं तपो दानं जपस्तीर्थं तथैव च
गुरुतत्त्वमविज्ञाय मूढास्ते आचरन्ति जनाः १२
गुरुर्बुद्ध्यात्मनो नान्यत्सत्यं सत्यं न संशयः
तल्लाभार्थं प्रयत्नस्तु कर्तव्यो हि मनीषिभिः १३
गूढ विद्या जगन्माया देहे चाज्ञानसंभवा
उदयो यत्प्रकाशेन गुरुशब्देन कथ्यते १४
सर्वपापविशुद्धात्मा श्रीगुरोः पादसेवनात्
देहि ब्रह्म भवेद्यस्मात्त्वत्कृपार्थं वदामि ते १५
गुरुपादांबुजं स्मृत्वा जलं शिरसि धारयेत्
सर्वतीर्थावगाहस्य संप्राप्नोति फलं नरः १६
शोषणं पापपङ्कस्य दीपनं ज्ञानतेजसाम्

गुरुपादोदकं सम्यक्संसारार्णवतारकम् १७
अज्ञानमूलहरणं जन्म कर्म निवारणम्
ज्ञानवैराग्यसिद्ध्यर्थं गुरुपादोदकं पिबेत् १८
गुरोः पादोदकं पीत्वा गुरोरुच्छिष्टभोजनम्
गुरुमूर्तेः सदा ध्यानं गुरुमन्त्रं सदा जपेत् १९
काशी क्षेत्रं तन्निवासो जाह्नवी चरणोदकम्
गुरुर्विश्वेश्वरः साक्षात्तारकं ब्रह्म निश्चितम् २०
गुरोः पादोदकं यत्तु गयाऽसौ सोऽक्षयो वटः
तीर्थराजः प्रयागश्च गुरुमूर्त्यै नमो नमः २१
गुरुमूर्तिं स्मरेन्नित्यं गुरुनाम सदा जपेत्
गुरोराज्ञां प्रकुर्वीत गुरोरन्यन्न भावयेत् २२
गुरुवक्त्रस्थितं ब्रह्म प्राप्यते तत्प्रसादतः
गुरोर्ध्यानं सदा कुर्यात्कुलस्त्री स्वपतेर्यथा २३
स्वाश्रमं च स्वजातिं च स्वकीर्तिपुष्टिवर्धनम्
एतत्सर्वं परित्यज्य गुरोरन्यन्न भावयेत् २४
अनन्याश्चिन्तयन्तो मां सुलभं परमं पदम्
तस्मात्सर्वप्रयत्नेन गुरोराराधनं कुरु २५
त्रैलोक्ये स्फुटवक्तारो देवाद्यसुरपन्नगाः
गुरुवक्त्रस्थिता विद्या गुरुभक्त्या तु लभ्यते २६
गुकारस्त्वन्धकारश्च रुकारस्तेज उच्यते
अज्ञानग्रासकं ब्रह्म गुरुदेव न संशयः २७
गुकारः प्रथमो वर्णो मायादिगुणभासकः

रुकारो द्वितीयो ब्रह्म माया भ्रान्ति विनाशनम्  २८
एवं गुरुपदं श्रेष्ठं देवानामपि दुर्लभम्
हाहा हूहू गणैश्चैव गन्धर्वैश्च प्रपूज्यते  २९
ध्रुवं तेषां च सर्वेषां नास्ति तत्त्वं गुरोः परम्
आसनं शयनं वस्त्रं भूषणं वाहनादिकम्  ३०
साधकेन प्रदातव्यं गुरुसन्तोषकारकम्
गुरोराराधनं कार्यं स्वजीवित्वं निवेदयेत्  ३१
कर्मणा मनसा वाचा नित्यमाराधयेद्गुरुम्
दीर्घदण्डं नमस्कृत्य निर्लज्जो गुरुसन्निधौ  ३२
शरीरमिन्द्रियं प्राणां सद्गुरुभ्यो निवेदयेत्
आत्मदारादिकं सर्वं सद्गुरुभ्यो निवेदयेत्  ३३
कृमिकीटभस्मविष्ठा दुर्गन्धिमलमूत्रकम्
श्लेष्मरक्तं त्वचा मांसं वञ्चयेन्न वरानने  ३४
संसारवृक्षमारूढः पतन्तो नरकार्णवे
येन चैवोद्धृताः सर्वे तस्मै श्रीगुरवे नमः  ३५
गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः
गुरुरेव परब्रह्म तस्मै श्रीगुरवे नमः  ३६
हेतवे जगतामेव संसारार्णवसेतवे
प्रभवे सर्वविद्यानां शंभवे गुरवे नमः  ३७
अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः  ३८
त्वं पिता त्वं च मे माता त्वं बन्धुस्त्वं च देवता

संसारप्रतिबोधार्थं तस्मै श्रीगुरवे नमः ३९
यत्सत्येन जगत्सत्यं यत्प्रकाशेन भाति तत्
यदानन्देन नन्दन्ति तस्मै श्रीगुरवे नमः ४०
यस्य स्थित्या सत्यमिदं यद्भाति भानुरूपतः
प्रियं पुत्रादि यत्प्रीत्या तस्मै श्रीगुरवे नमः ४१
येन चेतयते हीदं चित्तं चेतयते न यम्
जाग्रत्स्वप्नसुषुप्त्यादि तस्मै श्रीगुरवे नमः ४२
यस्य ज्ञानादिदं विश्वं न दृश्यं भिन्नभेदतः
सदेकरूपरूपाय तस्मै श्रीगुरवे नमः ४३
यस्यामतं तस्य मतं मतं यस्य न वेद सः
अनन्यभावभावाय तस्मै श्रीगुरवे नमः ४४
यस्य कारणरूपस्य कार्यरूपेण भाति यत्
कार्यकारणरूपाय तस्मै श्रीगुरवे नमः ४५
नानारूपमिदं सर्वं न केनाप्यस्ति भिन्नता
कार्यकारणता चैव तस्मै श्रीगुरवे नमः ४६
यदङ्घ्रिकमलद्वन्द्वं द्वन्द्वतापनिवारकम्
तारकं सर्वदाऽपद्भ्यः श्रीगुरुं प्रणमाम्यहम् ४७
शिवे क्रुद्धे गुरुस्त्राता गुरौ क्रुद्धे शिवो न हि
तस्मात्सर्वप्रयत्नेन श्रीगुरुं शरणं व्रजेत् ४८
वन्दे गुरुपदद्वन्द्वं वाङ्मनश्चित्तगोचरम्
श्वेतरक्तप्रभाभिन्नं शिवशक्त्यात्मकं परम्
गुकारं च गुणातीतं रुकारं रूपवर्जितम्

गुणातीतस्वरूपं च यो दद्यात्स गुरुः स्मृतः ४९
अत्रिनेत्रः सर्वसाक्षी अचतुर्बाहुरच्युतः
अचतुर्वदनो ब्रह्मा श्रीगुरुः कथितः प्रिये ५०
अयं मयाञ्जलिर्बद्धो दया सागरवृद्धये
यदनुग्रहतो जन्तुश्चित्रसंसारमुक्तिभाक् ५१
श्रीगुरोः परमं रूपं विवेकचक्षुषोऽमृतम्
मन्दभाग्या न पश्यन्ति अन्धाः सूर्योदयं यथा ५२
श्रीनाथचरणद्वन्द्वं यस्यां दिशि विराजते
तस्यै दिशे नमस्कुर्याद्भक्त्या प्रतिदिनं प्रिये ५३
तस्यै दिशे सततमञ्जलिरेष आर्ये
प्रक्षिप्यते मुखरितो मधुपैर्बुधैश्च
जागर्ति यत्र भगवान्गुरुचक्रवर्ती
विश्वोदय प्रलयनाटकनित्यसाक्षी ५४
श्रीनाथादि गुरुत्रयं गणपतिं पीठत्रयं भैरवं
सिद्धौघं बटुकत्रयं पदयुगं दूतीक्रमं मण्डलं
वीरान्द्व्यष्टचतुष्क षष्टि नवकं वीरावली पञ्चकं
श्रीमन्मालिनिमन्त्रराजसहितं वन्दे गुरोर्मण्डलम् ५५
अभ्यस्तैः सकलैः सुदिर्घमनिलैर्व्याधिप्रदैर्दुष्करैः
प्राणायामशतैरनेककरणैर्दुःखात्मकैर्दुर्जयैः
यस्मिन्नभ्युदिते विनश्यति बली वायुः स्वयं तत्क्षणात्
प्राप्तुं तत्सहजं स्वभावमनिशं सेवध्वमेकं गुरुम् ५६
स्वदेशिकस्यैव शरीरचिन्तनं भवेदनन्तस्य शिवस्य चिन्तनम्

स्वदेशिकस्यैव च नामकीर्तनं भवेदनन्तस्य शिवस्य कीर्तनम्  ५७
यत्पादरेणुकणिका कापि संसारवारिधेः
सेतुबन्धायते नाथं देशिकं तमुपास्महे  ५८
यस्मादनुग्रहं लब्ध्वा महदज्ञानमुत्सृजेत्
तस्मै श्रीदेशिकेन्द्राय नमश्चाभिष्टसिद्धये  ५९
पादाब्जं सर्वसंसारदावानलविनाशकम्
ब्रह्मरन्ध्रे सिताम्भोजमध्यस्थं चन्द्रमण्डले  ६०
अकथादित्रिरेखाब्जे सहस्रदलमण्डले
हंसपार्श्वत्रिकोणे च स्मरेत्तन्मध्यगं गुरुम्  ६१
सकलभुवनसृष्टिः कल्पिताशेषपुष्टिः
निखिलनिगमदृष्टिः संपदां व्यर्थदृष्टिः
अवगुणपरिमार्ष्टिस्तत्पदार्थैकदृष्टिः
भव गुणपरमेष्टिर्मोक्षमार्गैकदृष्टिः  ६२
सकलभुवनरङ्गस्थापना स्तंभयस्तिः
सकरुणरसवृष्टिस्तत्त्वमालासमष्टिः
सकलसमयसृष्टिः सच्चिदानन्ददृष्टिः
निवसतु मयि नित्यं श्रीगुरोर्दिव्यदृष्टिः  ६३
अग्निशुद्धसमन्ताच्च ज्वाला परिचकाधिया
मन्त्रराजमिमं मन्येऽहर्निशं पातु मृत्युतः  ६४
तदेजति तन्नैजति तद्दूरे तत्समीपके
तदन्तरस्य सर्वस्य तदु सर्वस्य बाह्यतः  ६५
अजोऽहमजरोऽहं च

अनादिनिधनः स्वयम्
अविकारश्चिदानन्द
अणीयान्महतो महान् ६६
अपूर्वाणां परं नित्यं स्वयंज्योतिर्निरामयम्
विरजं परमाकाशं ध्रुवमानन्दमव्ययम् ६७
श्रुतिः प्रत्यक्षमैतिह्यमनुमानश्चतुष्टयम्
यस्य चात्मतपो वेद देशिकं च सदा स्मरेत् ६८
मनुश्च यद्भवं कार्यं तद्वदामि महामते
साधुत्वं च मया दृष्ट्वा त्वयि तिष्ठति सांप्रतम् ६९
अखण्डमण्डलाकारं व्याप्तं येन चराचरं
तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः ७०
सर्वश्रुतिशिरोरत्नविराजितपदांबुजः
वेदान्ताम्बुजसूर्यो यस्तस्मै श्रीगुरवे नमः ७१
यस्य स्मरणमात्रेण ज्ञानमुत्पद्यते स्वयं
य एव सर्व संप्राप्तिस्तस्मै श्रीगुरवे नमः ७२
चैतन्यं शाश्वतं शान्तं व्योमातीतं निरञ्जनम्
नादबिन्दुकलातीतं तस्मै श्रीगुरवे नमः ७३
स्थावरं जङ्गमं चैव तथा चैव चराचरम्
व्याप्तं येन जगत्सर्वं तस्मै श्रीगुरवे नमः ७४
ज्ञानशक्तिसमारूढस्तत्त्वमाला विभूषितः
भुक्तिमुक्तिप्रदाताय तस्मै श्रीगुरवे नमः ७५
अनेकजन्मसंप्राप्तसर्वकर्मविदाहिने

स्वात्मज्ञानप्रभावेण तस्मै श्रीगुरवे नमः ७६
न गुरोरधिकं तत्त्वं न गुरोरधिकं तपः
तत्त्वं ज्ञानात्परं नास्ति तस्मै श्रीगुरवे नमः ७७
मन्नाथः श्रीजगन्नाथो मद्गुरुश्श्रीजगद्गुरुः
ममात्मा सर्वभूतात्मा तस्मै श्रीगुरवे नमः ७८
ध्यानमूलं गुरोर्मूर्तिः पूजा मूलं गुरोः पदम्
मन्त्रमूलं गुरोर्वाक्यं मोक्षमूलं गुरोः कृपा ७९
गुरुरादिरनादिश्च गुरुः परमदैवतम्
गुरोः परतरं नास्ति तस्मै श्रीगुरवे नमः ८०
सप्तसागरपर्यन्त तीर्थस्नानादिकं फलम्
गुरोरङ्घ्रिपयोबिन्दुसहस्रांशे न दुर्लभम् ८१
हरौ रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन
तस्मात्सर्वप्रयत्नेन श्रीगुरुं शरणं व्रजेत् ८२
गुरुरेव जगत्सर्वं ब्रह्मविष्णुशिवात्मकम्
गुरोः परतरं नास्ति तस्मात्संपूजयेद्गुरुम् ८३
ज्ञानं विज्ञानसहितं लभ्यते गुरुभक्तितः
गुरोः परतरं नास्ति ध्येयोऽसौ गुरुमार्गिभिः ८४
यस्मात्परतरं नास्ति नेति नेतीति वै श्रुतिः
मनसा वचसा चैव नित्यमाराधयेद्गुरुम् ८५
गुरोः कृपा प्रसादेन ब्रह्मविष्णुसदाशिवाः
समर्थाः प्रभवादौ च केवलं गुरुसेवया ८६
देवकिन्नरगन्धर्वाः पितरो यक्षचारणाः

मुनयोऽपि न जानन्ति गुरुशुश्रूषणे विधिम् ८७
महाहङ्कारगर्वेण तपो विद्या बलान्विताः
संसारकुहरावर्ते घटयन्त्रे यथा घटाः ८८
न मुक्ता देवगन्धर्वाः पितरो यक्षकिन्नराः
ऋषयः सर्वसिद्धाश्च गुरुसेवा पराङ्मुखाः ८९
ध्यानं शृणु महादेवि सर्वानन्दप्रदायकम्
सर्वसौख्यकरं नित्यं भुक्तिमुक्तिविधायकम् ९०
श्रीमत्परब्रह्मगुरुं स्मरामि श्रीमत्परब्रह्मगुरुं वदामि
श्रीमत्परब्रह्मगुरुं नमामि श्रीमत्परब्रह्मगुरुं भजामि ९१
ब्रह्मानन्दं परमसुखदं केवलं ज्ञानमूर्तिम्
द्वन्द्वातीतं गगनसदृशं तत्त्वमस्यादिलक्ष्यम् ९२
एकं नित्यं विमलमचलं सर्वधीसाक्षिभूतं
भवातीतं त्रिगुणरहितं सद्गुरुं तं नमामि ९३
नित्यं शुद्धं निराभासं निराकारं निरञ्जनम्
नित्यबोधं चिदानन्दं गुरुं ब्रह्म नमाम्यहम् ९४
हृदंबुजे कर्णिकमध्यसंस्थे सिंहासने संस्थितदिव्यमूर्तिम्
ध्यायेद्गुरुं चन्द्रकलाप्रकाशं चित्पुस्तकाभिष्टवरं दधानम् ९५
श्वेतांबरं श्वेतविलेपपुष्पं मुक्ता विभूषं मुदितं द्विनेत्रम्
वामाङ्कपीठस्थितदिव्यशक्तिं मन्दस्मितं सान्द्रकृपानिधानम् ९६
आनन्दमानन्दकरं प्रसन्नं ज्ञानस्वरूपं निजबोधयुक्तम्
योगीन्द्रमीड्यं भवरोगवैद्यं श्रीमद्गुरुं नित्यमहं नमामि ९७
यस्मिन्सृष्टिस्थितिध्वंसनिग्रहानुग्रहात्मकम्

कृत्यं पञ्चविधं शश्वद्भासते तं नमाम्यहम् ९८
प्रातः शिरसि शुक्लाब्जे द्विनेत्रं द्विभुजं गुरुम्
वराभययुतं शान्तं स्मरेत्तं नामपूर्वकम् ९९
न गुरोरधिकं न गुरोरधिकं न गुरोरधिकं न गुरोरधिकं
शिवशासनतः शिवशासनतः शिवशासनतः शिवशासनतः १००
इदमेव शिवं त्विदमेव शिवं त्विदमेव शिवं त्विदमेव शिवं
मम शासनतो मम शासनतो मम शासनतो मम शासनतः १०१
एवंविधं गुरुं ध्यात्वा ज्ञानमुत्पद्यते स्वयम्
तत्सद्गुरुप्रसादेन मुक्तोऽहमिति भावयेत् १०२
गुरुदर्शितमार्गेण मनःशुद्धिं तु कारयेत्
अनित्यं खण्डयेत्सर्वं यत्किञ्चिदात्मगोचरम् १०३
ज्ञेयं सर्वस्वरूपं च ज्ञानं च मन उच्यते
ज्ञानं ज्ञेयसमं कुर्यान्नान्यः पन्था द्वितीयकः १०४
एवं श्रुत्वा महादेवि गुरुनिन्दां करोति यः
स याति नरकं घोरं यावच्चन्द्रदिवाकरौ १०५
यावत्कल्पान्तको देहस्तावदेव गुरुं स्मरेत्
गुरुलोपो न कर्तव्यः स्वच्छन्दो यदि वा भवेत् १०६
हुङ्कारेण न वक्तव्यं प्राज्ञैः शिष्यैः कथञ्चन
गुरोरग्रे न वक्तव्यमसत्यं च कदाचन १०७
गुरुं त्वंकृत्य हुंकृत्य गुरुं निर्जित्य वादतः
अरण्ये निर्जले देशे स भवेद्ब्रह्मराक्षसः १०८
मुनिभिः पन्नगैर्वाऽपि सुरैर्वा शापितो यदि

कालमृत्युभयाद्वापि गुरुरक्षति पार्वति १०९
अशक्ता हि सुराद्याश्च अशक्ता मुनयस्तथा
गुरुशापेन ते शीघ्रं क्षयं यान्ति न संशयः ११०
मन्त्रराजमिदं देवि गुरुरित्यक्षरद्वयम्
स्मृतिवेदार्थवाक्येन गुरुः साक्षात्परं पदम् १११
श्रुतिस्मृती अविज्ञाय केवलं गुरुसेवकाः
ते वै संन्यासिनः प्रोक्ता इतरे वेषधारिणः ११२
नित्यं ब्रह्म निराकारं निर्गुणं बोधयेत्परम्
सर्वं ब्रह्म निराभासं दीपो दीपान्तरं यथा ११३
गुरोः कृपाप्रसादेन आत्मारामं निरीक्षयेत्
अनेन गुरुमार्गेण स्वात्मज्ञानं प्रवर्तते ११४
आब्रह्म स्तंबपर्यन्तं परमात्मस्वरूपकम्
स्थावरं जङ्गमं चैव प्रणमामि जगन्मयम् ११५
वन्देऽहं सच्चिदानन्दं भेदातीतं सदा गुरुम्
नित्यं पूर्णं निराकारं निर्गुणं स्वात्मसंस्थितम् ११६
परात्परतरं ध्येयं नित्यमानन्दकारकम्
हृदयाकाशमध्यस्थं शुद्धस्फटिकसन्निभम् ११७
स्फटिकप्रतिमा रूपं दृश्यते दर्पणे यथा
तथात्मनि चिदाकारमानन्दं सोऽहमित्युत ११८
अङ्गुष्ठमात्र पुरुषं ध्यायतश्चिन्मयं हृदि
तत्र स्फुरति भावो यः शृणु तं कथयाम्यहम् ११९
अगोचरं तथाऽगम्यं नामरूपविवर्जितम्

निःशब्दं तद्विजानीयात्स्वभावं ब्रह्म पार्वति १२०
यथा गन्धः स्वभावेन कर्पूरकुसुमादिषु
शीतोष्णादि स्वभावेन तथा ब्रह्म च शाश्वतम् १२१
स्वयं तथाविधो भूत्वा स्थातव्यं यत्रकुत्रचित्
कीतभ्रमरवत्तत्र ध्यानं भवति तादृशम् १२२
गुरुध्यानं तथा कृत्वा स्वयं ब्रह्ममयो भवेत्
पिण्डे पदे तथा रूपे मुक्तोऽसौ नात्र संशयः १२३

श्रीपार्वत्युवाच

पिण्डं किं तु महादेव पदं किं समुदाहृतम्
रूपातीतं च रूपं किमेतदाख्याहि शङ्कर १२४

श्री महादेव उवाच

पिण्डं कुण्डलिनी शक्तिः पदं हंसमुदाहृतम्
रूपं बिन्दुरिति ज्ञेयं रूपातीतं निरञ्जनम् १२५
पिण्डे मुक्ता पदे मुक्ता रूपे मुक्ता वरानने
रूपातीते तु ये मुक्तास्ते मुक्ता नात्र संशयः १२६
स्वयं सर्वमयो भूत्वा परं तत्त्वं विलोकयेत्
परात्परतरं नान्यत्सर्वमेतन्निरालयम् १२७
तस्यावलोकनं प्राप्य सर्वसङ्गविवर्जितः
एकाकी निःस्पृहः शान्तस्तिष्ठासेत्तत्प्रसादतः १२८
लब्धं वाऽथ न लब्धं वा स्वल्पं वा बहुलं तथा
निष्कामेनैव भोक्तव्यं सदा सन्तुष्टचेतसा १२९
सर्वज्ञपदमित्याहुर्देही सर्वमयो बुधाः

सदानन्दः सदा शान्तो रमते यत्रकुत्रचित् १३०
यत्रैव तिष्ठते सोऽपि स देशः पुण्यभाजनम्
मुक्तस्य लक्षणं देवि तवाग्रे कथितं मया १३१
उपदेशस्तथा देवि गुरुमार्गेण मुक्तिदः
गुरुभक्तिस्तथा ध्यानं सकलं तव कीर्तितम् १३२
अनेन यद्भवेत्कार्यं तद्वदामि महामते
लोकोपकारकं देवि लौकिकं तु न भावयेत् १३३
लौकिकात्कर्मणो यान्ति ज्ञानहीना भवार्णवम्
ज्ञानी तु भावयेत्सर्वं कर्म निष्कर्म यत्कृतम् १३४
इदं तु भक्तिभावेन पठते शृणुते यदि
लिखित्वा तत्प्रदातव्यं तत्सर्वं सफलं भवेत् १३५
गुरुगीतात्मकं देवि शुद्धतत्त्वं मयोदितम्
भव व्याधिविनाशार्थं स्वयमेव जपेत्सदा १३६
गुरुगीताक्षरैकं तु मन्त्रराजमिमं जपेत्
अन्ये च विविधा मन्त्राः कलां नार्हन्ति षोडशीम् १३७
अनन्तफलमाप्नोति गुरुगीता जपेन तु
सर्वपापप्रशमनं सर्वदारिद्र्यनाशनम् १३८
कालमृत्युभयहरं सर्वसङ्कटनाशनम्
यक्षराक्षसभूतानां चोरव्याघ्रभयापहम् १३९
महा व्याधि हरं सर्वं विभूतिसिद्धिदं भवेत्
अथवा मोहनं वश्यं स्वयमेव जपेत्सदा १४०
वस्त्रासने च दारिद्र्यं पाषाणे रोगसंभवः

मेदिन्यां दुःखमाप्नोति काष्ठे भवति निष्फलम् १४१
कृष्णाजिने ज्ञानसिद्धिर्मोक्षश्री व्याघ्रचर्मणि
कुशासने ज्ञानसिद्धिः सर्वसिद्धिस्तु कंबले १४२
कुशैर्वा दूर्वया देवि आसने शुभ्रकंबले
उपविश्य ततो देवि जपेदेकाग्रमानसः १४३
ध्येयं शुक्लं च शान्त्यर्थं वश्ये रक्तासनं प्रिये
अभिचारे कृष्णवर्णं पीतवर्णं धनागमे १४४
उत्तरे शान्तिकामस्तु वश्ये पूर्वमुखो जपेत्
दक्षिणे मारणं प्रोक्तं पश्चिमे च धनागमः १४५
मोहनं सर्वभूतानां बन्धमोक्षकरं भवेत्
देवराजप्रियकरं सर्वलोकवशं भवेत् १४६
सर्वेषां स्तंभनकरं गुणानां च विवर्धनम्
दुष्कर्मनाशनं चैव सुकर्मसिद्धिदं भवेत् १४७
असिद्धं साधयेत्कार्यं नवग्रहभयापहम्
दुःस्वप्ननाशनं चैव सुस्वप्न फलदायकम् १४८
सर्वशान्तिकरं नित्यं तथा वन्ध्यासुपुत्रदम्
अवैधव्यकरं स्त्रीणां सौभाग्यदायकं सदा १४९
आयुरारोग्यमैश्वर्यपुत्रपौत्रप्रवर्धनम्
अकामतः स्त्री विधवा जपान्मोक्षमवाप्नुयात् १५०
अवैधव्यं सकामा तु लभते चान्यजन्मनि
सर्वदुःखभयं विघ्नं नाशयेच्छापहारकम् १५१
सर्वबाधाप्रशमनं धर्मार्थकाममोक्षदम्

यं यं चिन्तयते कामं तं तं प्राप्नोति निश्चितम्  १५२
कामितस्य कामधेनुः कल्पना कल्पपादपः
चिन्तामणिश्चिन्तितस्य सर्वमङ्गलकारकम्  १५३
मोक्षहेतुर्जपेन्नित्यं मोक्षश्रियमवाप्नुयात्
भोगकामो जपेद्यो वै तस्य कामफलप्रदम्  १५४
जपेच्छाक्तश्च सौरश्च गाणपत्यश्च वैष्णवः
शैवश्च सिद्धिदं देवि सत्यं सत्यं न संशयः  १५५
अथ काम्यजपे स्थानं कथयामि वरानने
सागरे वा सरित्तीरेऽथवा हरिहरालये  १५६
शक्तिदेवालये गोष्ठे सर्वदेवालये शुभे
वटे च धात्रीमूले वा मठे वृन्दावने तथा  १५७
पवित्रे निर्मले स्थाने नित्यानुष्ठानतोऽपि वा
निर्वेदनेन मौनेन जपमेतं समाचरेत्  १५८
श्मसाने भयभूमौ तु वटमूलान्तिके तथा
सिद्ध्यन्ति धौत्तरे मूले चूतवृक्षस्य सन्निधौ  १५९
गुरुपुत्रो वरं मूर्खस्तस्य सिद्ध्यन्ति नान्यथा
शुभकर्माणि सर्वाणि दीक्षा व्रततपांसि च  १६०
संसारमलनाशार्थं भव पाशनिवृत्तये
गुरुगीतांभसिस्नानं तत्त्वज्ञः कुरुते सदा  १६१
स एव च गुरुः साक्षात्सदा सद्ब्रह्मवित्तमः
तस्य स्थानानि सर्वाणि पवित्राणि न संशयः  १६२
सर्वशुद्धः पवित्रोऽसौ स्वभावाद्यत्र तिष्ठति

तत्र देवगणाः सर्वे क्षेत्रे पीठे वसन्ति हि १६३
आसनस्थः शयानो वा गच्छंस्तिष्ठन्वदन्नपि
अश्वारूढो गजारूढः सुप्तो वा जागृतोऽपि वा १६४
शुचिष्मंश्च सदा ज्ञानी गुरुगीता जपेन तु
तस्य दर्शनमात्रेण पुनर्जन्म न विद्यते १६५
समुद्रे च यथा तोयं क्षीरे क्षीरं घृते घृतं
भिन्ने कुंभे यथाकाशस्तथात्मा परमात्मनि १६६
तथैव ज्ञानी जीवात्मा परमात्मनि लीयते
ऐक्येन रमते ज्ञानी यत्र तत्र दिवानिशम् १६७
एवंविधो महामुक्तः सर्वदा वर्तते बुधः
तस्य सर्वप्रयत्नेन भावभक्तिं करोति यः १६८
सर्वसन्देहरहितो मुक्तो भवति पार्वति
भुक्तिमुक्तिद्वयं तस्य जिह्वाग्रे च सरस्वति १६९
अनेन प्राणिनः सर्वे गुरुगीता जपेन तु
सर्वसिद्धिं प्राप्नुवन्ति भुक्तिं मुक्तिं न संशयः १७०
सत्यं सत्यं पुनः सत्यं धर्म्यं साङ्ख्यं मयोदितं
गुरुगीतासमं नास्ति सत्यं सत्यं वरानने १७१
एको देव एकधर्म एक निष्ठा परं तपः
गुरोः परतरं नान्यन्नास्ति तत्त्वं गुरोः परम् १७२
माता धन्या पिता धन्यो धन्यो वंशः कुलं तथा
धन्या च वसुधा देवि गुरुभक्तिः सुदुर्लभा १७३
शरीरमिन्द्रियं प्राणाश्चार्थः स्वजनबान्धवाः

माता पिता कुलं देवि गुरुरेव न संशयः १७४
आकल्पजन्मना कोटया जपव्रत तपः क्रियाः
तत्सर्वं सफलं देवि गुरुसन्तोषमात्रतः १७५
विद्यातपो बलेनैव मन्दभाग्याश्च ये नराः
गुरुसेवां न कुर्वन्ति सत्यं सत्यं वरानने १७६
ब्रह्मविष्णुमहेशाश्च देवर्षिपितृकिन्नराः
सिद्धचारणयक्षाश्च अन्येऽपि मुनयो जनाः १७७
गुरुभावः परं तीर्थमन्यतीर्थं निरर्थकम्
सर्वतीर्थाश्रयं देवि पादाङ्गुष्ठं च वर्तते १७८
जपेन जयमाप्नोति चानन्तफलमाप्नुयात्
हीनकर्म त्यजन्सर्वं स्थानानि चाधमानि च १७९
जपं हीनासनं कुर्वन्हीनकर्म फलप्रदम्
गुरुगीतां प्रयाणे वा सङ्ग्रामे रिपुसङ्कटे १८०
जपञ्जयमवाप्नोति मरणे मुक्तिदायकम्
सर्वकर्म च सर्वत्र गुरुपुत्रस्य सिद्धयति १८१
इदं रहस्यं नो वाच्यं तवाग्रे कथितं मया
सुगोप्यं च प्रयत्नेन मम त्वं च प्रिया त्विति १८२
स्वामि मुख्यगणेशादि विष्णवादीनां च पार्वति
मनसापि न वक्तव्यं सत्यं सत्यं वदाम्यहम् १८३
अतीव पक्वचित्ताय श्रद्धा भक्तियुताय च
प्रवक्तव्यमिदं देवि ममात्माऽसि सदा प्रिये १८४
अभक्ते वञ्चके धूर्ते पाखण्डे नास्तिके नरे

मनसापि न वक्तव्या गुरुगीता कदाचन १८५

संसारसागरसमुद्धरणैकमन्त्रम्
ब्रह्मादिदेवमुनिपूजितसिद्धमन्त्रम्
दारिद्र्यदुःखभवरोगविनाशमन्त्रम्
वन्दे महाभयहरं गुरुराजमन्त्रम् १८६

श्री गुरुदेव चरणार्पणमस्तु

*Śhrī Guru Gītā, Transliteration and English Translations*, (Ganeshpuri: Shree Gurudev Ashram).